ङ्गरिजो, तथा विराट्स्वराजो दृश्येते, न लौकिकेषु। अतो लौकिकेषु(१) सन्देहाभावान्निर्णयनिमित्तभूता देवतादयो नेष्यन्ते।

(९५) स्वराः षड्जादयः॥ ६४॥

षड्जर्षभ-गान्धार-मध्यम-पञ्चम-धैवत-निषादाः स्वरा गायत्र्यादिषु क्रमेण द्रष्टव्याः॥

(९६)सित-सारङ्ग-पिसङ्ग-कृष्ण-नील-लोहित-गौरा वर्णाः॥६५॥

गायत्र्यादिषु क्रमेण वर्णा वर्णनिर्णयनिमित्तमभिधीयन्ते॥

(९७) आग्निवेश्य-काश्यप-गौतमाङ्गिरस-भार्गव-कौशिक-वाशिष्ठानि गोत्राणि इति॥ ६६॥

गायत्र्यादीनां क्रमेणैतानि गोत्राणि, भवन्तीति वाक्यशेषः। श्यामान्यतिच्छन्दांसि, रोचनाभाः कृतयः (२), इत्येवमधीयतेऽतिच्छान्दसाः(३)। तन्नोपपद्यते। कृतीनामतिच्छन्दसाञ्च निचृद्भुरिजोर्विराट्स्वराजोश्च प्रदेशाभावात् कश्चिन्नास्ति संशयः।

---

१ ततो लौकिकपद्ये इति ख, ग, चिह्नितपुस्तकपाठः। अतो लौकिकपद्ये इति पुस्तकान्तरपाठः।

२ अथ रोचनाभाः कृतयः श्यामान्यतिच्छन्दांसीति ख, चिह्नितपुस्तकपाठः।

३ इत्येवमादिकमधीयते छान्दसा इति ख, ग, चिह्नितपुस्तकपाठः।

यस्य निर्णयनिमित्तं वर्णविन्यासः क्रियते, (१) तदपि ऋषि-देवता-स्वर-वर्णानां ज्ञानान्निःश्रेयसमिच्छन्ति छान्दसाः (२)॥

इति भट्टहलायुधकृतौ छन्दोवृत्तौ (३) तृतीयोऽध्यायः॥ ३॥

(अथ चतुर्थोऽध्यायः।)

## (९८) चतुःशतमुत्कृतिः॥ १॥

चतुरधिकं शतं चतुःशतं। मध्यमपदलोपी समासः। अथवा चत्वारि च शतञ्च चतुःशतं। द्वन्द्व-समासः। कर्म्मधारयपक्षस्तु(४) नेष्यते। तत्र चतुःशतानीति प्राप्नोति। यत्र चतुःशतमक्षराणां सङ्ख्या भवति, तत्, उत्कृतिर्नाम च्छन्दः॥

## (९९) चतुरश्चतुरस्त्यजेदुत्कृतेः॥ २॥

चतुःशताक्षराच् छन्दसः क्रमेण चतुरश्चतुरः सङ्ख्याविशेषान् त्यजेत्। एतदुक्तम्भवति, उत्कृतेरारभ्य चतुर्भिश्चतुर्भिरक्षरै-र्न्यूनानि छन्दांसि अन्यानि स्थापयेत्, अष्टचत्वारिंशदक्षरं यावत्॥

## (१००) तान्यभिसंव्याप्रेभ्यः कृतिः॥ ३॥

'तानि' उत्कृतेरनन्तराणि च्छन्दांसि, अभि सम् वि आङ् प्र

---

१ यस्य निर्णयनिमित्तञ्च वर्णोपन्यासः क्रियते इति ग, चिह्नितपुस्तकपाठः। एतदनन्तरमेवात्राध्यायसमाप्तिवाक्यमस्ति। तदपीत्यादिकः पाठोऽत्र नास्ति। ख, चिह्नितपुस्तके तु तदपीति पदद्वयं नास्ति, तत ऋषिदेवतेत्यादिकः सम्पूर्णः पाठोऽस्ति।

२ यथोक्तानां कामतोवर्णा इति, क, चिह्नितपुस्तकप्रान्तेऽधिकः पाठो विन्यस्तः।

३ भट्टहलायुधकृतायां पिङ्गलच्छन्दोवृत्तौ इति ख, ग, चिह्नितपुस्तकपाठः।

४ कर्मधारयसमासस्तु इति पुस्तकान्तरपाठः।

इत्येतेभ्यः पराणि कृतिसञ्ज्ञानि भवन्ति। तत्र शताक्षरं छन्दोऽभिकृतिः। षण्णवत्यक्षरं, सङ्कृतिः। द्वानवत्यक्षरं, विकृतिः। अष्टाशीत्यक्षरम्, आकृतिः। चतुरशीत्यक्षरं, प्रकृतिः॥

(१०१) प्रकृत्या च॥ ४॥

उपसर्गवर्जितः शुद्धः कृतिशब्दः प्रकृत्या स्वरूपेणैवावतिष्ठते। तेनैतदुक्तं भवति, अशीत्यक्षरं, कृतिः (१)॥

(१०२) धृत्यष्टि-शर्करी-(२) जगत्यः॥ ५॥

कृतेरधस्ताद्धृति अष्टि शर्करी जगती इत्येते शब्दाः क्रमेण व्यवस्थापनीयाः॥

(१०३) पृथक् पृथक् पूर्वत एतान्येवैषाम्॥ ६॥

'एषां' धृत्यादीनां, 'पूर्व्वतः पृथक् पृथक्', 'एतान्येव' शब्दरूपाणि, विन्यसेत्। पृथक्-पृथग्-ग्रहणं प्रत्येकं पूर्व्वत्वज्ञापनार्थम्। अन्यथा हि समुदायपूर्व्ववृत्तित्वमेषां (३) स्यात्। तेनायमर्थः, धृतिशब्दात् पूर्व्वं धृतिशब्दः, अष्टिशब्दात् पूर्व्वमष्टिशब्दः, शर्करीशब्दात् पूर्व्वं शर्करीशब्दः, जगतीशब्दात् पूर्व्वं जगतीशब्दः॥

---

१ अशीत्यक्षरं छन्दः कृतिर्नामेति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

२ शक्करीति ख, ग, चिह्नितपुस्तकपाठः। शक्करीति पुस्तकान्तरपाठः। इत्थं सर्वत्र शर्करीशब्दपाठान्तरं ज्ञेयम्।

३ समुदायपूर्वत्वमेषामिति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

(१०४) द्वितीयं द्वितीयमतितः ॥ ७ ॥

अत्र द्वितीयं द्वितीयं शब्दरूपम् (१) अतिशब्दात् परतः प्रयोक्तव्यम्। एवं सत्युत्तरेषां छन्दसामेताः सञ्ज्ञाः क्रमेण भवन्ति। तत्र षट्सप्तत्यक्षरम्, अतिधृतिः(२)। द्वासप्तत्यक्षरं, धृतिः। अष्टषष्ठ्यक्षरम्, अत्यष्टिः। चतुःषष्ठ्यक्षरम्, अष्टिः। षष्ठ्यक्षरम्, अतिशक्करी। षट्पञ्चाशदक्षरं, शक्करी। द्वापञ्चाशदक्षरम्, अतिजगती। अष्टाचत्वारिंशदक्षरं, जगती॥

(१०५) अत्र (३) लौकिकम् ॥ ८ ॥

अधिकारोऽयमाशास्त्रपरिसमाप्तेः। पूर्व्वेषां छन्दसां वैदिकत्वमेव। इतः प्रभृत्यार्य्यादीनां चूलिकापर्य्यन्तानां लौकिकत्वमेव। समान्यादीनामुत्कृतिपर्य्यन्तानां वैदिकत्वं लौकिकत्वञ्च। 'अत्र' वैदिकच्छन्दसां प्रस्तावे, प्रसङ्गाद् वेदवदनादिमुनिपारम्पर्य्यागतं स्मृतिपुराणेतिहासादिषु दृश्यमानमार्य्यादिदण्डकपर्य्यन्तं 'लौकिक'च्छन्दोजातमधिक्रियते। तन्मूलत्वात् काव्यस्य। काव्यञ्च कीर्त्तिरूपत्वादानन्दहेतुत्वाच्च पुरुषार्थः॥

(१०६) आत्रैष्टुभाच्च यदार्षम् ॥ ९ ॥

आङभिविधौ। त्रिष्टुबेव त्रैष्टुभं, स्वार्थे तद्धितः। गायत्र्यादि-

---

१ शब्दस्वरूपमतित इति ग, चिह्नितपुस्तकपाठः।

२ षट्सप्तत्यक्षरं छन्दोतिधृतिरिति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

३ अथेति ख, ग, चिह्नितपुस्तकपाठः।

त्रिष्टुप्पर्य्यन्तं यदार्षं छन्दोजातं, वैदिके व्याख्यातं, लौकिके च तत्, तथैव द्रष्टव्यं। किं तदार्षं ? चतुर्विंशत्यक्षरा गायत्री। अष्टाविंशत्यक्षरोष्णिक्। द्वात्रिंशदक्षराऽनुष्टुप्। षट्त्रिंशदक्षरा बृहती। चत्वारिंशदक्षरा पङ्क्तिः। चतुश्चत्वारिंशदक्षरा त्रिष्टुप्। 'चः' समुच्चये॥

(१०७) पादश्चतुर्भागः (१)॥ १०॥

'चतुर्भागः' (२) चतुर्विंशत्यक्षराया गायत्र्याश्चतुर्थो भागः, पादसञ्ज्ञां लभते। गायत्र्याः षड़क्षरः पादः। एवमुष्णिगादिष्वपि द्रष्टव्यम् (३)। समवृत्तविषयमेतत्॥

(१०८) यथावृत्तसमाप्तिर्वा॥ ११॥

यस्य वृत्तस्य यादृशैः पादैर्न्यूनाक्षरैरधिकाक्षरैर्वा समाप्तिर्दृश्यते, तस्य तादृशा एव पादा ग्रहीतव्याः। 'वा'शब्दो व्यवस्थितविभाषा। उद्गतादिषु विषमवृत्तेषु चतुर्भागातिक्रमेणापि पादव्यवस्थादर्शनात्॥

आदौ तावद् गणच्छन्दो मात्राच्छन्दस्ततः परम्।
तृतीयमक्षरच्छन्दः (४) छन्दस्त्रेधा तु लौकिकम्॥

---

१ पादश्चतुर्थभाग इति पुस्तकान्तरपाठः।

२ चतुर्थो भागश्चतुर्थभाग इति पुस्तकान्तरपाठः।

३ बोद्धव्यमिति पुस्तकान्तरपाठः।

४ तृतीयमक्षरं छन्द इति ख, ग, चिह्नितपुस्तकपाठः।

आर्य्याद्युद्गीतिपर्य्यन्तं गणच्छन्दः समीरितम्।
वैताल्यादि चूलिकान्तं मात्राच्छन्दः प्रकीर्त्तितम्॥
समान्याद्युत्कृतिं यावदक्षरच्छन्द एव च (१)।

तत्रादौ तावदार्य्यालक्षणसिद्ध्यर्थं गणसञ्ज्ञां करोति।

## (१०९) लः समुद्रा गणः॥ १२॥

ल इत्येकमात्रिकस्याक्षरस्य ग्रहणम्। समुद्रा इति चतुःसङ्ख्योपलक्षणार्थम्। चतुर्णां लकाराणां, गणः, इत्येषा सञ्ज्ञा विधीयते।

## (११०) गौ गन्तमध्यादिर्लश्च॥ १३॥

अनेन गणस्य विन्यासभेदं दर्शयति। स हि गणः कदाचिद् गुरुद्वयेन भवति, कदाचिदन्तेनैकेन गुरुणा, कदाचिन्मध्यमेन, कदाचिदाद्येन, कदाचिच्चतुर्भिर्लघुभिः। षष्ठस्य भेदस्याभावात्(२) विस्पष्टार्थमिदं सूत्रम्। अन्तमध्यादिरिति प्रथमं द्वन्द्वसमासं कृत्वा पश्चाद् गकारेण बहुव्रीहिः। द्वन्द्वात्परो यः श्रूयते, लभतेऽसौ प्रत्येकाभिसम्बन्धम्। द्वौ गकारौ, चत्वारो लघवो भवन्ति,

---

१ आर्य्याद्युद्गीतिपर्यन्तं गणच्छन्दः। वैतालीयादिचूलिकापर्यन्तं मात्राच्छन्दः। समान्यादिकमुत्कृतिपर्यन्तमक्षरं छन्द इति ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

२ द्विगुरुकस्य(ऽऽ)चास्य गणस्य मात्राप्रस्तारनियमेन प्रस्तारे क्रियमाणे सर्वगुर्वादिसर्वलघ्वन्ताः पञ्चैव भेदा भवन्ति। ते च भेदा द्विगुरुकाद्गणादेव क्रमशः ऽऽ, ।।ऽ, ।ऽ।, ऽ।।, ।।।।, एते पञ्च गणा जायन्ते। सूत्रेऽप्येते प्रस्तारक्रमेण पञ्चैव वर्णिताः। अतोऽत्र षष्ठभेदस्याभाव इति भावः।

स एको गणः(ऽऽ)। गकारोऽन्ते यस्य स गन्तो द्वितीयो गणः(॥ऽ)। गकारो मध्ये यस्य स गमध्यस्तृतीयो गणः (।ऽ।)। गकार आदिर्यस्य (१) स गादिस्तुर्य्यो गणः(ऽ॥)। नकारलकारो मिलितौ चत्वारो लघवो भवन्ति, स पञ्चमो गणः(॥॥)। एवं गणेषु सिद्धेषु इदानीमार्य्यालक्षणं करोति॥

(अथार्य्याधिकारः।)

(१११) स्वरा अर्द्धञ्चार्य्यार्द्धम्॥१४॥

गणग्रहणमनुवर्त्तते। स्वरा इति सप्तानां सञ्ज्ञा। यत्र प्रस्तारे गणाः सप्त भवन्ति, अर्द्धञ्च गणस्य, तदार्य्यार्द्धं निष्पद्यते। द्वितीयमप्यर्द्धं तादृशमेव। समप्रविभागेऽर्द्धशब्दः। यद्येवम्, अर्द्धशब्दस्य अर्द्धं न पुंसकम् इत्यनेनैकदेशिसमासे सति पूर्वनिपातः प्राप्नोति। यथा, अर्द्धाढकम्, अर्द्धपलम्, अर्द्धखारी, इति। नैष दोषः। सत्यपि समप्रविभागत्वे सम्बन्धमात्रस्यात्र विवक्षितत्वात् समप्रविभागस्यार्द्धशब्दस्यैकदेशिसमासव्यभिचारदर्शनात्। यथा, तुलार्द्धेन गां क्रीणाति (२)।

पणार्द्धक्रीतताम्बूलचर्वणाद् गर्वितानना।
अनभ्यासाद् गलग्लाला यान्त्येते वारयात्रिकाः॥

तथा अत्र समप्रविभागत्वेऽप्यर्द्धशब्दस्यैकदेशिसमासदर्शनाच्च।

---

१ गकार आदौ यस्येति पुस्तकान्तरपाठः।

२ यथा द्रुमार्द्धेन गां क्रीणाति। यथार्द्धमर्द्धेन क्रीणातीति च, चिह्नितपुस्तकपाठः।

अर्द्धचन्द्रं दधन्मूर्द्ध्नि पातु वः पार्व्वतीपतिः ।
कालकूटविषं हन्तुं सङ्गृहीतमिवामृतम् ॥

तथाच ।

तुल्यार्थं तुल्यसामर्थ्यं मर्म्मज्ञं व्यवसायिनम् ।
अर्द्धराज्यहरं भृत्यं यो न हन्यात् स हन्यते ॥

अत्रार्द्धस्य लक्षणं कुर्वाण एवं ज्ञापयत्याचार्य्यः, यदार्य्याया-मवान्तरपादव्यवस्था नास्ति। तेन द्वीपादन्यस्मादित्यादौ गण-त्रयस्यान्ते गुरुत्वं (१) न स्यात् ॥

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥

## (११२) अत्रायुङ् न ज् ॥ १५ ॥

'अत्र' आर्य्याच्छन्दसि, 'अयुग्' गणः, प्रथमस्तृतीयः पञ्चमः सप्तमश्च, 'न जगणः' मध्यगुरुर्न (२) कर्त्तव्यः। शेषास्तु कामतोऽत्र भवन्ति ॥

## (११३) षष्ठो ज् ॥ १६ ॥

आर्य्याच्छन्दसि षष्ठो गणो मध्यगुरुरेव (३) भवति। अत्रोदा-हरणम्।

१ अन्यस्मादपि, घटयति, इत्युभयत्र श्लेषकारस्य सति पादान्तत्वे, 'अन्ते' (२।१०) इति गुरुत्वं भवेदिति भावः।

२ मध्ये गुरुर्नेति ख, ग, चिह्नितपुस्तकपाठः।

३ अत्रार्य्याच्छन्दसि षष्ठो गणो मध्ये गुरुरेवेति ख, चिह्नितपुस्तकपाठः।

भ० १ स० २ द्वि०३ द्वि०४ स०५ ज०६ सर्व०७ गु०

सा जयति जगत्यार्य्या देवी दिवमुत्पतिष्णुरतिरुचिरा (१) ।

द्वि०१ ज०२ स०३ भ०४ द्वि०५ ज०६ ए०७गु०

याद्दृश्यतेऽम्बरतले (२) कंसवधोत्पातविद्युदिव (३) ॥

(११४) न्लौ वा ॥ १७ ॥

षष्ठ इत्यनुवर्त्तते । आर्य्यायाः षष्ठो गणः (॥॥) सर्वलघुर्वा भवति ॥ तत्रोदाहरणम् ।

---

१ द्यामुत्पतिष्णुरतिरुचिरेति क, चिह्नितपुस्तकपाठः ।

२ या दृश्यते गगनतले इति पुस्तकान्तरपाठः ।

३ सा जयतीत्यस्य गणविभागदर्शनं यथा, 'सा जय' इति आदिगुर्वात्मको भ (ऽ।।) गण एकः १। 'तिजग' इति अन्तगुरुमान् स (।।ऽ) गणो द्वितीयः२। 'त्यार्या' इति द्विगुरुको (ऽऽ) गणस्तृतीयः३। 'देवी' इति च द्विगुरुको(ऽऽ)गणश्चतुर्थः४। 'दिवमु' इति अन्तगुरुकः स(।।ऽ)गणः पञ्चमः५ । 'पतिष्णु' इति मध्यगुरुर्ज(।ऽ।) गणः षष्ठः६ । 'रतिरुचि' इति चतुर्लघुरूपो (।।।।) गणः सप्तमः ७। 'रा' इति एको गुरुः । एवमार्य्यायाः प्रथमेऽर्द्धे गुरूपेताः सप्त गणा भवन्ति । तत्र षष्ठो जगणः कर्त्तव्यः । अन्येषु यथेच्छाचारः । 'याद्दृ' इति द्विगुरुको (ऽऽ) गण एकः१। 'श्यतेम्ब' इति मध्यगुरुर्ज (।ऽ।) गणो द्वितीयः२। 'रतले' इति अन्तगुरुमान् स (।।ऽ) गणस्तृतीयः३। 'कंसव' इति आदिगुरुर्भ (ऽ।।) गणश्चतुर्थः४। 'धोत्या' इति द्विगुरुरूपो (ऽऽ) गणः पञ्चमः ५। 'तविद्यु' इति मध्यगुरुमान् ज (।ऽ।) गणः षष्ठः६ । 'दि' इति एकलघुरूपो (।) गणः सप्तमः७ । 'व' इति एको (ऽ) गुरुः, पादान्तस्थस्य गुरुत्वातिदेशात् ।

द्वि०१ ज०२ द्वि०३ द्वि०४ द्वि०५ सर्व० ६ सर्व०७ गु०

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

**रूपान्तरेण देवीं तामेव स्तौमि, सपदि किल महिषः (१)।**

द्वि०१ भ०२ भ०३ भ०४ स०५ ए०६ द्वि०७ गु०

ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ ऽ

**पादस्पर्शसुखादिव मीलितनयनोऽभवद्यस्याः (२) ॥**

## (११५) न्लौ चेत् पदं द्वितीयादि । १८ ॥

षष्ठो गणः सर्वलघुश्चेद् भवति, तदा द्वितीयादक्षरादारभ्य पदं प्रवर्त्तते (१)। पूर्वमेवोदाहरणम्।

---

१ मिषमहिष इति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

२ रूपान्तरेणेत्यस्या गणविभागव्याख्यानदर्शनं यथा, 'रूपा' इति द्विगुरुकः(ऽऽ)एको गणः१। 'न्तरेण' इति ज (।ऽ।) गणो द्वितीयः२। देवीं इति द्विगुरुकः (ऽऽ) गणस्तृतीयः३। 'तामे' इति च द्विगुरुकः(ऽऽ)गणश्चतुर्थः४। 'व स्तौ' इति च द्विगुरुकः (ऽऽ) गणः पञ्चमः५। 'मि सपदि' इति सर्वलघुमान्(।।।।)गणः षष्ठः६। 'किल महि' इति अपरः सर्वलघुमान् (।।।।) गणः सप्तमः७। 'षः' इति एको गुरुः (ऽ)। एवमस्याः प्रथमेऽर्द्धे गुरुयुक्ताः सप्त गणा भवन्ति। 'पाद' इति द्विगुरुकः (ऽऽ) गणः प्रथमः१। 'स्पर्शसु' इति भ (ऽ।।) गणो द्वितीयः२। 'खादिव' इति च भ (ऽ।।) गणस्तृतीयः ३। 'मीलित' इति पुनर्भ (ऽ।।) गणश्चतुर्थः४। 'नयनो' इति स (।।ऽ) गणः पञ्चमः५। 'भ' इति एकलघुरूपो (।) गणःषष्ठः६। 'वद्य' इति द्विगुरुरूपो(ऽऽ) गणः सप्तमः७। 'स्याः' इति एको गुरुः॥ इत्यमस्या उत्तरदलेपि गोपेताः सप्तगणा जायन्ते। अस्या उभयदले एव षष्ठो गणः६ सर्वलघुरेवास्ति, अतः सर्वलघुमती इयमपरापि वेदितव्या।

एवं सर्वत्रार्याच्छन्दःसु वक्ष्यमाणेषु आर्योदाहरणोपरिन्यस्त साङ्केतिकगणानां विभागो यथासम्भवं व्याख्येयः। विस्तारभयान्न तत्र तत्रैतादृशगणविभागो दर्शितः, दर्शितं केवलं सङ्केतमात्रम्।

१ षष्ठगणस्य चतुर्लघुरूपस्योदाहरणभूतानां चतुर्णामक्षराणां मध्ये द्वितीयादक्षरादारभ्य सुबन्तादि पदं प्रवर्त्तते इति स्पष्टार्थः। यथा, 'मि सपदि' इति सर्वलघुरूपस्य

### (११९) सप्तमः प्रथमादि ॥ १९ ॥

षष्ठे गणे मध्यगुरौ (।ऽ।) सर्वलघौ वा (।।।।) जाते सप्तमो गणः सर्वलघुश्चेत् भवति, तदा प्रथमाक्षरादारभ्य पदं प्रवर्त्तते (१)। तत्रोदाहरणम् (२)।

द्वि०१ भ०२ द्वि०३ ज०४ द्वि०५ ज०६ सर्व०७ गु०

S S S I I S S I S I S S I S I I I I I S

ब्रह्मक्षत्रकुलीनः प्रलीनसामन्तचक्रनुत-चरणः।

सर्व०१ ज०२ द्वि०३ द्वि०४ द्वि०५ ज०६ ए०७ गु०

I I I I I S I S S S S S S I S I I S

सकलसुकृतैकपुञ्जः श्रीमान् मुञ्जश्चिरञ्जयति (१२)॥

सर्व०१ ज०२ द्वि०३ द्वि०४ सर्व०५ सर्व०६ सर्व०७ गु०

I I I I I S I S S S S I I I I I I I I I I I I I S

जयतिभुवनैकवीरः सीरायुध-तुलित-विपुल-बलविभवः।

---

षष्ठगणस्य 'मि'कारं प्रथमाक्षरं परित्यज्य सपदीत्यस्य सकारात् द्वितीयाक्षरात् पदप्रवृत्तिर्जाता। अत एवास्या अपि रूपान्तरेणेति पूर्वपठितमेवोदाहरणं बोद्धव्यम्।

१ सप्तमगणस्य प्रथमाक्षरादारभ्य सुबन्तादिपदं प्रवर्त्तते ननु तत्र प्रथमाक्षरं गणविगार्थं पूर्वमालब्धम् इति स्पष्टार्थः। यथास्या उदाहरणे 'तचक्र' इति षष्ठगणस्य मध्यगुरोरुदाहरणाक्षरेभ्यः परभूतानां सप्तमगणस्योदाहरभूतानां 'नुतचर' इति चतुर्णामक्षराणां प्रथमात् 'नु' इत्यक्षरात् सुबन्तादिपदप्रवृत्तिर्जाता। ननु तदक्षरं गणविभागनिष्पत्त्यर्थं पूर्वमालब्धम्।

२ षष्ठमध्यगुरुगणात् परतः सप्तमसर्वलघुगणवत्यार्योदाहरणं ब्रह्म क्षत्रेति। षष्ठसर्वलघुगणात् परतः सप्तमसर्वलघुगणवत्यार्योदाहरणं जयतीति। अनयोर्गणप्रभेददर्शनमुक्तश्लोकाक्षरमस्तकोपरि कृतं वर्त्तते। तत् पूर्ववदूह्यम्।

सर्व० १ ज० २ सर्व० ३ भ० ४ द्वि० ५ ए० ६ द्वि० ७ गु०

। । । । । ऽ । । । । । ऽ । । ऽ ऽ । ऽ ऽ ऽ

अनवरतवित्त-वितरण-निर्जित-चम्पाधिपो मुञ्जः ॥

(११७) अन्त्ये पञ्चमः ॥ २० ॥

अन्ते भवमन्त्यं, दिगादित्वाद् यत्। अन्त्ये द्वितीयेऽर्द्धे पञ्चमश्चेद् गणः (।।।।) सर्वलघुर्भवति, तदा प्रथमादि पदं प्रवर्त्तते। तत्रोदाहरणम् ।

सर्व० १ भ० २ द्वि० ३ स० ४ स० ५ ज० ६ भ० ७ गु०

। । । । ऽ । । ऽ ऽ । । ऽ । । ऽ । ऽ । ऽ । । ऽ

स जयति वाक्पतिराजः सकलार्थिमनोरथैक-कल्पतरुः ।

द्वि० १ ज० २ भ० ३ द्वि० ४ सर्व० ५ ए० ६ भ० ७ गु०

ऽ ऽ । ऽ । ऽ । । ऽ ऽ । । । । । ऽ । । ऽ

प्रत्यर्थिभूत-पार्थिव-लक्ष्मीहठहरण-दुर्ललितः (१) ॥

(११८) षष्ठश्च ल् ॥ २१ ॥

अन्त्य इत्यनुवर्त्तते। 'अन्त्ये' द्वितीयेऽर्द्धे, मध्यगुरौ (।ऽ।) सर्वलघौ (।।।।) वा षष्ठे गणे प्राप्ते, तदपवादो लकारो विधीयते। पूर्वमेवोदाहरणम् ॥

---

१ अस्या उत्तरदले हठहरेतिपञ्चमस्य सर्वलघुगणस्य प्रथमाक्षरात् हकारात् आरभ्य पदोत्पत्तिः, न तु चतुर्थगणावयवीभूताक्षरात्। अतः प्रथमादिपद-प्रवृत्तिमती आर्येयम्।

(११९) त्रिषु गणेषु पादः पथ्यार्द्धे च ॥ २२ ॥

चकारोऽन्त्य इत्यनुकर्षणार्थः। यस्या आर्य्याया अन्त्येऽर्द्धे आद्ये च त्रिषु गणेषु पादः समाप्यते, सा आर्य्या पथ्या नाम भवति। तद्यथा,

द्वि०१ द्वि०२ द्वि०३ भ०४ द्वि०५ ज०६ द्वि०७ गु०

ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । ऽ ऽ । ऽ । ऽ ऽ ऽ

पथ्याशी व्यायामी स्त्रीषु जितात्मा नरो न रोगी स्यात्।

सर्व०१ भ०२ द्वि०३ भ०४ द्वि०५ ए०६ द्वि०७ गु०

। । । । ऽ । । ऽ ऽ ऽ । । ऽ ऽ । ऽ ऽ ऽ

यदि वचसा मनसा वा द्रुह्यति नित्यं न भूतेभ्यः (१) ॥

पादग्रहणं यत्युपलक्षणार्थम् ॥

(१२०) विपुलाऽन्या ॥ २३ ॥

यस्या आर्य्याया अन्त्येऽर्द्धे आद्ये वा उभयोर्वा त्रिषु गणेषु पादो न विश्राम्यति, सा आर्य्या विपुला नाम। सा चाद्यन्तोभयपूर्व्वकत्वात् त्रिधा भवति। सामान्येन विधानमेतत्। तत्रादि-विपुला।

द्वि०१ द्वि०२ द्वि०३ ज०४ द्वि०५ सर्व०६ द्वि०७ गु०

ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ ऽ । । । । ऽ ऽ ऽ

स्निग्धच्छाया-लावण्य-लेपिनो किञ्चिदवनतघ्राणा।

---

१ यस्या उभयदले गणत्रयेषु पादसमाप्तिरत इयं पथ्या नामार्या।

सर्व०१ द्वि०२ द्वि०३ स०४ द्वि०५ ए०६ द्वि०७ गु०

| | | | ऽ ऽ ऽ ऽ | | ऽ ऽ ऽ | ऽ ऽ ऽ

मुखविपुला सौभाग्यं लभते स्त्रीत्याह माण्डव्यः (१)॥

जघनविपुला।

द्वि०१ अ०२ स०३ म०४ द्वि०५ अ०६ द्वि०७ गु०

ऽ ऽ | ऽ | | | ऽ ऽ | | ऽ ऽ | ऽ | ऽ ऽ ऽ

चित्तं हरन्ति हरिणीदीर्घदृशः कामिनां कलालापैः।

द्वि०१ अ०२ द्वि०३ सर्व०४ स०५ ए०६ सर्व०७ गु०

ऽ ऽ | ऽ | ऽ ऽ | | | | | | ऽ | | | | | ऽ

नीवीविमोचनव्याजकथितजघना जघनविपुला(२)॥

उभयविपुला।

द्वि०१ सर्व०२ स०३ अ०४ द्वि०५ अ०६ म०७ गु०

ऽ ऽ | | | | | | ऽ | ऽ | ऽ ऽ | ऽ | ऽ | | ऽ

या स्त्री कुचकलशनितम्बमण्डले जायते महाविपुला।

द्वि०१ अ०२ स०३ ज०४ म०५ ए०६ म०७ गु०

ऽ ऽ | ऽ | | | ऽ | ऽ | ऽ | | | ऽ | | ऽ

गम्भीरनाभिरतिदीर्घलोचना भवति सा सुभगा (३)॥

---

१ यत्र मुखे आद्यदले 'स्निग्ध' 'च्छाया' 'लाव' इति गणत्रयमुल्लङ्घ्य लावण्य-शब्दपर्यन्तं पादो विश्राम्यति, अत इयं मुखविपुला नाम आर्या। उक्तलक्षणा सुखसौभाग्यवती रमणी च मुखविपुला कथ्यते।

२ यस्या जघने (अन्त्ये) चरमदले 'नीवी' 'विमोच' 'नव्या' इति गणत्रयात् परं चतुर्थगणाद्यक्षरे जकारे पादो विश्राम्यति, अत इयं जघनविपुला नाम आर्या। उक्तलक्षणा जघनयोर्विपुलत्ववती प्रशस्तजघना नारी च जघनविपुला कथ्यते।

३ यस्या उभयोर्दलयोर्गणत्रयान्ते 'यास्त्री' 'कुचकल' 'शनित' इत्यत्र 'गम्भी'

अत्रोच्यते। पथ्याविपुलालक्षणयोः सहानवस्थानलक्षण-विरोधस्तेन मिश्रीभावो नास्ति। य एवांशो विपुलया स्पृष्टस्तेनैव पथ्यात्वं नष्टं भवति। उभयाश्रयत्वात् पथ्यालक्षणस्य विपुलायास्तत्त्वांशेनापि प्रवेशो दुर्लभः। ततश्च पथ्यालक्षणैकांश-वैकल्येऽपि तदन्यमात्रविषयत्वाद् विपुला भवत्येव। पथ्याचपलयोश्च विरोधाभावाद् बाध्यबाधकभावो नास्ति। तत्रायं सङ्ग्रहः।

एकैव भवति पथ्या विपुलास्तिस्रस्ततश्चतस्रस्ताः (१)।
चपलाभेदैस्त्रिभिरपि भिन्ना इति षोडशार्य्याः स्युः॥
गीतिचतुष्टयमित्थं प्रत्येकं षोडशप्रकारं स्यात्।
साकल्येनार्य्याणामशीतिरेव भेदाः स्युः (२)॥

'रनाथि' 'रतिदी' इत्यत्र च पादो न विश्राम्यति, अत इयं महाविपुला नाम आर्या। कुचादिमहत्त्वादिलक्षणयुक्ता योषिच्च महाविपुला उच्यते।

१ तिस्रोविपुलाश्चतस्र एवैता इति ख, ग, चिह्नितपुस्तकपाठः। तिस्रो विपुलास्ततश्चतस्रस्ता इति पुस्तकान्तरपाठः।

२ अशीतिरेवं विकल्पाः स्युरिति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च। एका पथ्या, तिस्रो विपुलाः, मिलिता एताः, चतस्रो जाताः। पुनरेताः, चपला-भेदत्रयैः प्रत्येकं विशेषिताः सत्यो द्वादशान्या आर्या जायन्ते। एताश्च सर्वा मिलित्वा षोडशार्या भवन्ति। एवं गीतिरुपगीतिरुद्गीतिरार्यागीतिश्चैताश्च पूर्वोक्तषोडश-भेदैर्विभिन्नाः सत्यः प्रत्येकं षोडशषोडशप्रकारा आर्या जायन्ते। सर्वाश्चैताः पञ्चषोडशसङ्ख्यात्मिका आर्या मिलित्वा अशीतिरुपजायन्ते। पुनरेता अशीति-रार्याः सुखबोधार्थमधोधः क्रमेण नामोल्लेखेनापि विन्यस्यन्ते। यथा,

पथ्यार्या १। आदिविपुलार्या २। अन्तविपुलार्या ३। उभयविपुलार्या ४। मुखचपलापथ्यार्या ५। मुखचपलादिविपुलार्या ६। मुखचपलान्तविपुलार्या ७। मुखचपलोभयविपुलार्या ८। जघनचपलापथ्यार्या ९। जघनचपलादिविपुलार्या १०।

तेषामनुक्तोदाहरणान्यूह्यानि ॥

जघनचपलान्तविपुलार्या११ । जघनचपलोभयविपुलार्या१२ । महाचपलापथ्यार्या१३ । महाचपलादिविपुलार्या १४ । महाचपलान्तविपुलार्या १५ । महाचपलोभयविपुलार्या १६ । गीतिपथ्यार्या १७ । गीत्यादिविपुलार्या १८ । गीत्यन्तविपुलार्या १९ । गीत्युभयविपुलार्या २० । मुखचपलागीतिपथ्यार्या २१ । मुखचपलागीत्यादिविपुलार्या २२ । मुखचपलागीत्यन्तविपुलार्या २३ । मुखचपलागीत्युभयविपुलार्या २४ । जघनचपलागीतिपथ्यार्या २५ । जघनचपलागीत्यादिविपुलार्या २६ । जघनचपलागीत्यन्तविपुलार्या २७ । जघनचपलागीत्युभयविपुलार्या २८ । महाचपलागीतिपथ्यार्या २९ । महाचपलागीत्यादिविपुलार्या ३० । महाचपलागीत्यन्तविपुलार्या ३१ । महाचपलागीत्युभयविपुलार्या ३२ । उपगीतिपथ्यार्या ३३ । उपगीत्यादिविपुलार्या ३४ । उपगीत्यन्तविपुलार्या ३५ । उपगीत्युभयविपुलार्या ३६ । मुखचपलोपगीतिपथ्यार्या ३७ । मुखचपलोपगीत्यादिविपुलार्या ३८ । मुखचपलोपगीत्यन्तविपुलार्या ३९ । मुखचपलोपगीत्युभयविपुलार्या ४० । जघनचपलोपगीतिपथ्यार्या ४१ । जघनचपलोपगीत्यादिविपुलार्या ४२ । जघनचपलोपगीत्यन्तविपुलार्या ४३ । जघनचपलोपगीत्युभयविपुलार्या ४४ । महाचपलोपगीतिपथ्यार्या ४५ । महाचपलोपगीत्यादिविपुलार्या ४६ । महाचपलोपगीत्यन्तविपुलार्या ४७ । महाचपलोपगीत्युभयविपुलार्या ४८ । उद्गीतिपथ्यार्या ४९ । उद्गीत्यादिविपुलार्या ५० । उद्गीत्यन्तविपुलार्या ५१ । उद्गीत्युभयविपुलार्या ५२ । मुखचपलोद्गीतिपथ्यार्या ५३ । मुखचपलोद्गीत्यादिविपुलार्या ५४ । मुखचपलोद्गीत्यन्तविपुलार्या ५५ । मुखचपलोद्गीत्युभयविपुलार्या ५६ । जघनचपलोद्गीतिपथ्यार्या ५७ । जघनचपलोद्गीत्यादिविपुलार्या ५८ । जघनचपलोद्गीत्यन्तविपुलार्या ५९ । जघनचपलोद्गीत्युभयविपुलार्या६० । महाचपलोद्गीतिपथ्यार्या ६१ । महाचपलोद्गीत्यादिविपुलार्या ६२ । महाचपलोद्गीत्यन्तविपुलार्या ६३ । महाचपलोद्गीत्युभयविपुलार्या ६४ । आर्यागीतिपथ्यार्या ६५ । आर्यागीत्यादिविपुलार्या ६६ । आर्यागीत्यन्तविपुलार्या ६७ । आर्यागीत्युभयविपुलार्या ६८ । मुखचपलार्यागीतिपथ्यार्या ६९ । मुखचपलार्यागीत्यादिविपुलार्या ७० । मुखचपलार्यागीत्यन्तविपुलार्या ७१ । मुखचपलार्यागीत्युभयविपुलार्या ७२ । जघनचपलार्यागीतिपथ्यार्या ७३ । जघनचपलार्यागीत्यादिविपुलार्या ७४ । जघनचपलार्यागीत्यन्तविपुलार्या ७५ । जघनचपलार्यागीत्युभयविपुलार्या ७६ । महाचपला-

(१२१) चपला द्वितीयचतुर्थौ मध्ये जौ (१) ॥ २४ ॥

अधिकारोऽयम्। द्वितीयचतुर्थौ गणौ मध्यगुरू(।ऽ।)भवतः, प्रथमश्चान्तगुरुः(।।ऽ), तृतीयो द्विगुरुः(ऽऽ), पञ्चमश्चादिगुरुः(ऽ।।), शेषं यथाप्राप्तं। एवं गकारयोर्मध्ये द्वितीयचतुर्थौ जकारौ भवतः, साऽऽर्य्या चपला नाम। उदाहरणमग्रतः॥

(१२२) पूर्व्वे मुखपूर्व्वा ॥ २५ ॥

पूर्व्वेऽर्द्धे चपलालक्षणञ्चेद् भवति, तदासौ मुखचपला आर्य्या (२)। पथ्यापूर्वं मुखचपलोदाहरणम्।

स० १ ज०२ द्वि०२ ज०४ द्वि०५ ज०६ भ०७ गु०

। । ऽ । ऽ । ऽऽ । ऽ । ऽऽ । ऽ । ऽ । । ऽ

अतिदारुणा द्विजिह्वा परस्य मर्मानुसारिणी(२)कुटिला।

र्य्यागीतिपथ्यार्य्या ७७। महाचपलार्य्यागीत्यादिविपुलार्य्या ७८। महाचपलार्य्यागीत्यन्त-विपुलार्य्या ७९। महाचपलार्य्यागीत्युभयविपुलार्य्या ८० इति। एतासामुदाहरणानि नामानुकूलमूह्यानि। अप्रसिद्धिहेतोर्न तानि ग्रन्थेऽस्मिन् प्रदर्शितानि। अत्र मुखजघन-शब्दयोः क्रमेण पूर्वमुत्तरञ्चार्थः। यथा शरीरस्य मुखं पूर्वं जघनञ्चोत्तरमतोऽत्रापि छन्दः-शास्त्रे आर्य्यापूर्वोत्तरार्द्धयोर्मुखजघनत्वकल्पना। विपुलचपलशब्दयोरपि पूर्वोक्त-लक्षणातिक्रमरूपोऽर्थः। यथा वैपुल्यचापल्ययोर्न नियमस्तिष्ठति नियमातिक्रम एव भवति। अतोऽत्रापि तयोः पूर्वोक्तलक्षणातिक्रमरूपार्थे व्यवहारः। आर्य्योदाहरणेषु तु मुखजघनादिशब्दानां पक्षे प्रकृतार्थोऽपि परिस्फुरति।

१ उभयदलयोर्गमध्यगतौ जगणौ चेच्चपला लक्षणं सिद्धमिति, एवञ्चैतत्सर्वमन्यत्रापि छन्दोमञ्जरीवृत्तरत्नाकरादिषु प्रतिपादितम्। यत्तु हलायुधेन प्रथमश्चान्तगुरुरि-त्याद्युक्तं, तच्चिन्त्यम्। सर्वत्र चपलोदाहरणेषु प्रथमस्यान्तगुरोः पञ्चमस्यादिगुरोश्चा-दर्शनात्।

२ मुखचपला नामेति च, चिह्नितपुस्तकपाठः।

२ परस्य रन्ध्रानुचारिणीति च, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

द्वि०१ सर्व० २ द्वि०३ द्वि०४ द्वि०५ ए०६ सर्व०७ गु०

ऽ ऽ । । । । ऽ ऽ ऽ ऽ ऽ ऽ ऽ । । । । । ऽ

दूरात् परिहरणीया नारी नागीव मुखचपला (१) ॥

आदिविपुलापूर्व्वकं(२)मुखचपलोदाहरणम्।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

यस्याश्च लोचने(३)पिङ्गले भ्रुवौ सङ्गते मुखं दीर्घम्।

भ०१ ज०२ द्वि०३ द्वि०४ भ०५ ए०६ सर्व०७ गु०

। । ऽ । ऽ । ऽ ऽ ऽ ऽ ऽ । । । । । । । ऽ

विपुलोऽन्नताश्च दन्ताः कान्ताऽसौ भवति मुखचपला(४) ॥

उभयविपुलापूर्व्वं (५)मुखचपलोदाहरणम्।

---

१ अस्या उभयोर्दलयोस्त्रिषु गणेषु पादो विश्राम्यति, पुनः पूर्वार्द्धे 'दूराद्धि' इति द्वितीयः 'परस्त्र' इति चतुर्थश्च जगणः, षतिदेति एकगुरुगणः प्रथमः, 'त्रिका' इति तृतीयो द्विगुरुगणः, वर्त्तते, एतेनेयं मुखे पूर्वार्द्धे चपलालक्षणयुक्ता भवति, अतः पथ्यापूर्विका मुखचपला नाम आर्येयम्। 'मुखे' आस्ये, चापल्यवती उक्तलक्षणा नारी च मुखचपला नामेत्यपरोऽर्थः।

२ विपुलापूर्वकमिति ख, चिह्नितपुस्तकपाठः।

३ यस्या विलोचने इति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

४ अस्या मुखे पूर्वार्द्धे आदिविपुलावत् 'नेपि' इति तृतीयगणान्ते पादो न विश्राम्यति, अथ द्वितीयार्द्धे तु 'दन्ताः' इति तृतीयगणान्ते पादः पथ्यावत् विश्राम्यति, द्वितीयचतुर्थौ च जगणौ स्तः, अत इयमादिविपुलापूर्विका मुखचपलानामार्या। पिङ्गललोचनादिलक्षणसम्पन्ना मुखे वाक्चापल्यवती नारी च मुखचपलेत्युच्यते।

५ अन्तविपुलापूर्वकमिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

विपुलाभिजातवंशोद्भवापि रूपातिरेकरम्यापि ।

द्वि०१ ज०२ द्वि०३ ज०४ सर्व०५ ए०६ सर्व०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । । । । । । । । । । । ऽ

निःसार्य्यते गृहाद्दस्रभापि यदि भवति मुखचपला (१) ॥

(१२१) जघनपूर्वेतरञ्च ॥ २६ ॥

द्वितीयेऽर्द्धे चपलालक्षणञ्चेद् भवति, सा आर्य्या जघन-चपला नाम ।

तत्र पथ्यापूर्व्वकं जघनचपलोदाहरणम् ।

द्वि०१ भ०२ द्वि०३ भ०४ स०५ ज०६ द्वि०७ गु०

ऽ ऽ ऽ । । ऽ ऽ ऽ । । । । ऽ । ऽ । ऽ ऽ ऽ

यत्पादस्य कनिष्ठा, न स्पृशति महीमनामिका वापि ।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ सर्व०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । । । । ऽ

सा सर्वधूर्त्तभोग्या, भवेदवश्यं जघनचपला (२) ॥

अन्तविपुलापूर्व्वकं जघनचपलोदाहरणम् ।

---

१ यस्या उभयदले गणत्रयान्ते पादो न विश्राम्यति, पुनः द्वितीयचतुर्थौ जगणौ, प्रथमो सगणः, तृतीयो द्विगुरुः वर्त्तते, अत इयमुभयविपुलापूर्विका मुखचपला नाम आर्या । उक्तलक्षणा मुखे आस्ये वाक्चापल्यवती च नारी मुखचपलेत्युच्यते ।

२ अस्याः पूर्वार्द्धे 'यत्पा' 'दस्यक' 'निष्ठा' इति गणत्रयान्ते पादः समाप्यते, 'जघने' उत्तरार्द्धे द्वितीयः, चतुर्थश्च जगणो वर्त्तते, अत इयं पथ्यापूर्विका जघन-चपलानामार्या बोध्या । एतदार्योक्तलक्षणा जघनयोश्चापल्यवती नारी च जघन-चपलेत्युच्यते ।

द्वि०१ द्वि०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०
ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ
यस्याः पादाङ्गुष्ठं व्यतीत्य याति प्रदेशिनी दीर्घा।
स०१ ज०२ द्वि०३ ज०४ भ०५ ए०६ स०७ गु०
। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । । । । । ऽ ऽ
विपुले कुले प्रसूतापि सा ध्रुवं जघनचपला स्यात् (१)॥

महाविपुलापूर्व्वकं जघनचपलोदाहरणम्।

स०१ स०२ स०३ ज०४ भ०५ ज०६ द्वि०७ गु०
। । ऽ । । ऽ । । ऽ । ऽ । ऽ । । । ऽ । ऽ ऽ ऽ
मकरध्वजसद्मनि दृश्यते स्फुटं तिलकलाञ्छनं यस्याः।
स०१ ज०२ द्वि०३ ज०४ भ०५ ए०६ स०७ गु०
। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । । । । ऽ ऽ
विपुलान्वयाभिजातापि जायते जघनचपलासौ (२)॥

---

१ यस्याः 'अन्ते' उत्तरार्द्धे तु विपुलावत् गणत्रयान्ते पादो न विश्राम्यति, अपितु चतुर्थगणस्याद्यक्षरे 'पि'कारे। पुनः 'जघने' उत्तरार्द्धे, चपलावत् सगणः (।।ऽ) प्रथमः, द्वितीयः, चतुर्थश्च (।ऽ।) जगणः, द्विगुरुस्तृतीयः, आदिगुरुर्भगणः पञ्चमो वर्त्तते, अत इयमन्तविपुलापूर्विका जघनचपलार्या परिज्ञेया। उक्तलक्षणा नारी च जघनचपलोच्यते। सुखबोधार्थं कतिपयानामार्याणां गणविभागदर्शनं विस्तरेण वर्णितं, ग्रन्थबाहुल्यभयादितः परं सङ्क्षिप्य वक्ष्यामि।

२ यस्या महाविपुलावत् उभयोर्दलयोस्त्रिषु गणेषु पादो न विश्राम्यति, पुनः 'जघने' उत्तरार्द्धे, चपलावत् सगणः प्रथमः, जगणौ द्वितीयचतुर्थौ, द्विगुरुः तृतीयः, पञ्चमो भश्च, अत इय महाविपुलापूर्विका जघनचपला नामार्या ज्ञेया। उक्तलक्षणा

## (१२४) उभयोर्महाचपला ॥ २७ ॥

यस्या उभयोरर्द्धयोश्चपलालक्षणं भवति, सा आर्य्या महाचपला नाम। तत्र पथ्यापूर्व्वकं महाचपलोदाहरणम्।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

**हृदयं हरन्ति नार्य्यो मुनेरपि भ्रूकटाक्षविक्षेपैः।**

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ म०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । ऽ

**दोर्मूलनाभिदेशं निदर्शयन्त्यो महाचपलाः (१)॥**

विपुलापूर्व्वकं महाचपलोदाहरणम्।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

**चिवुके कपोलदेशेऽपि कूपिका दृश्यते स्मिते यस्याः।**

---

कामिनी च जघनचपलोच्यते। मकरध्वजस्य सद्मनि भवति स्फुटतिलकलाञ्छनं यस्या इति क, चिह्नितपुस्तकपाठः। परन्त्वेतादृशपाठे महाविपुलालक्षणं न घटते। अत्र तु सद्मनीत्यत्र गणत्रयान्ते पादविश्रामो जायते, वस्तुतस्तु नैष आवश्यकः। उत्तरार्द्धप्रथमे विपुलान्ववायजातापि इति, विपुलान्वयजातापि इति, विपुले कुले प्रजातापीति च पुस्तकत्रयपाठः।

१ अस्याः पथ्यावदुभयत्र गणत्रयान्ते पादो विश्राम्यति, पुनस्तत्र चपलावत् गमध्यगौ जगणौ द्वितीयचतुर्थौ, द्विगुरुस्तृतीयो, वर्त्तते, अत इयं पथ्यापूर्व्विका महाचपला नामार्या। एतदार्य्योक्तलक्षणा महाचापल्यविशिष्टा सुन्दरी च महाचपलोच्यते।

स०१ अ०२ द्वि०३ ज०४ द्वि०५ स०६ भ०७ गु०

I I S I S I S S I S I S S I S I I S

**विपुलान्वयप्रसूतापि जायते सा महाचपला (१) ॥**

**(१२५) आद्यर्द्धसमा गीतिः ॥२८॥**

आद्येनार्द्धेन सममन्त्यं यस्याः (२) सा आद्यर्द्धसमा, मध्यपद-लोपी समासः (३)। एतदुक्तं भवति द्वितीयेप्यर्द्धे षष्ठो गणो जकारो न्लौ वा कर्त्तव्यः। तत्र पथ्यागीत्युदाहरणम्।

स०१ द्वि०२ स०३ भ०४ स०५ ज०६ द्वि०७ गु०

I I S S S I I S S I I I I S I S I S S S

**मधुरं वीणारणितं पञ्चमसुभगश्च कोकिलालापः।**

द्वि०१ भ०२ द्वि०३ स०४ स०५ ज०६ भ०७ गु०

S S S I I S S I I S I I S I S I S I I S

**गीतिः पौरवधूनामधुना कुसुमायुधं प्रबोधयति (४) ॥**

आदिविपुलागीत्युदाहरणम्।

---

१ यस्या विपुलावदुभयत्र गणत्रयान्ते पादो न विश्राम्यति, पुनस्तत्र महाचपला-वत् गमध्यगौ जगणौ द्वितीयचतुर्थौ, द्विगुरुस्तृतीयः, वर्त्तते, अत इयं विपुला-पूर्व्विका महाचपला नामार्य्या वेदितव्या। उक्तलक्षणा महाचापल्यवती च नारी महाचपलेत्युच्यते।

२ आद्यर्द्धेन सममन्त्यमर्द्धं यस्या इति ख, ग, चिह्नितपुस्तकपाठः। आद्येन सममन्त्यमर्द्धं यस्याः, आद्यार्द्धेन सममन्त्यं यस्या इति च पुस्तकान्तरपाठः।

३ मध्यपदलोपी समास इति ख, ग, चिह्नितपुस्तकपाठः।

४ पौरवधूनां सुप्तं कुसुमायुधं प्रबोधयतीति ख, ग, चिह्नितपुस्तकपाठः। यस्याः पथ्यावदुभयत्र गणत्रयान्ते पादो विश्राम्यति, पुनरस्या उभयार्द्धे षष्ठजगणयुक्तत्वात्

सर्व०१ अ०२ द्वि०३ अ०४ द्वि०५ अ०६ स०७ गु०

I I I I S I I S S I S I S S I S I I I S S

इयमपरा विपुलागीतिरुच्यते सर्व्वलोकहितचेताः ।

स०१ ज०२ द्वि०३ अ०४ स०५ ज०६ द्वि०७ गु०

I I S I S I S S I S I I I S I S I S S S

यदनिष्टमात्मनस्तत्परेषु भवतापि मा क्वचित् कारि (१)॥

पथ्यामहाचपलागीत्युदाहरणम् ।

द्वि०१ ज०२ द्वि०३ अ०४ द्वि०५ ज०६ स०७ गु०

S S I S I S S I S I S S I S I I I S S

कामञ्चकास्ति गीतिर्म्मगीदृशां सीधुपान-चपलानाम् ।

स०१ ज०२ द्वि०३ अ०४ द्वि०५ सर्व०६ स०७ गु०

I I S I S I S S I S I S S I I I I I I I S S

सुरतञ्च मुक्तलज्जं निरर्गलालापभणितरमणीयम्(२)॥

महाचपलामहाविपुलागीत्युदाहरणम् ।

---

समाने वर्त्तते, अत इयमार्य्याप्रथमार्द्धलक्षणवती पथ्यापूर्व्विका गीतिर्नामार्य्या ज्ञातव्या। सरालामालापश्च गीतिरुच्यते।

१ यस्या विपुलावत् पूर्व्वार्द्धे गणत्रयेषु पादो न विश्राम्यति, उत्तरार्द्धे तत्र विश्राम्यति, पुनरुभे दले षष्ठजगणवत्त्वात्समाने वर्त्तेते, अत इयमादिविपुलापूर्व्विकार्य्याप्रथमार्द्धलक्षणवती गीतिर्नामार्य्या। विपुलोद्घोषश्च विपुला गीतिरुच्यते।

२ निरर्गलोल्लापभणितरमणीयमिति पुस्तकान्तरपाठः। निरर्गलालापभणितरमणीयमिति ख, चिह्नितपुस्तकपाठः। निरर्गलोल्लापभणितरमणीयमिति ग, चिह्नितपुस्तकपाठः। अस्याः पथ्यावदुभयत्र गणत्रयान्ते पादो विश्राम्यति, पुनः

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ सर्व०६ सर्व०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । । । । । । । ऽ

पञ्चेषुवल्लभः पञ्चमध्वनिस्तत्र भवति यदि विपुलः ।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

चपलं करोति कामाकुलं मनः कामिनामसौ गीतिः (१)॥

## (१२१) अन्त्येनोपगीतिः ॥२९॥

अन्त्येनार्द्धेन सममाद्यमर्द्धं यस्याः, सा आर्य्या उपगीतिर्नाम ।

तत्र पथ्योपगीत्युदाहरणम् ।

द्वि०१ भ०२ भ०३ द्वि०४ द्वि०५ ए०६भ०७ गु०

ऽ ऽ ऽ । । ऽ । । ऽ ऽ ऽ ऽ ऽ । ऽ । । ऽ

गान्धर्वं मकरध्वजदेवस्यास्त्रं जगद्विजयि ।

---

प्रथमेऽर्द्धे षष्ठो जगणः, द्वितीयेऽर्द्धे षष्ठो नलघुरूपः सर्वलघुर्गणोऽस्ति, महाचपलावत् उभयत्र द्वितीयतुर्य्यौ गमध्ये जौ, तृतीयो द्विगुरुश्च, वर्त्तते, अत इयं पथ्यामहाचपलापूर्व्विका गीतिर्नामार्य्या ।

१ अस्या महाचपलावत् दलद्वये द्वितीयतुर्य्यौ गमध्यगौ जौ, तृतीयो द्विगुरुश्चास्ति, पुनरुभयार्द्धे महाविपुलावत् गणत्रयान्ते पादो न विश्राम्यति, प्रथमार्द्धे पुनः षष्ठो नलघुरूपः सर्वलघुर्गणः. द्वितीयार्द्धे षष्ठो जगणो वर्त्तते, अत इयं महाचपलामहाविपुलापूर्व्विका गीतिर्नामार्य्या । हलायुधमते गीतिलक्षणे षष्ठो जगणो नलघुरूपेण गणेन विकल्प्यते, अत एतदुदाहरणद्वये प्रथमार्द्धे द्वितीयार्द्धे च षष्ठो नलघुरूपो गणो दृश्यते ।

सर्व०१ भ०२ भ०३ स०४ द्वि०५ ए०६ द्वि०७ गु०

। । । । । ऽ । । ऽ । । । । । ऽ ऽ ऽ । । ऽ ऽ ऽ

इति समवेक्ष्य मुमुक्षुभिरुपगीतिस्त्यज्यते दूरः(१) ॥

महाविपुलोपगीत्युदाहरणम्(२) ।

स० १ ज०२ द्वि०३ सर्व०४ भ०५ ए०६ द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । । । । । ऽ । । । । ऽ ऽ ऽ

विपुलोपगीतिझङ्कारमुखरिते भ्रमरमालानाम् ।

द्वि०१ ज०२ द्वि०३ ज०४ स०५ ए०६ द्वि०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । । । ऽ । ऽ ऽ ऽ

रेवातपोवने वस्तुतोऽस्तु सततं मम प्रीतिः (३) ॥

पथ्यामहाचपलोपगीत्युदाहरणम् ।

स० १ ज० २ द्वि०३ ज०४ द्वि०५ ए०६ भ० ७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । ऽ

विषयामिषाभिलाषं करोति चित्तं सदा चपलम् ।

---

१ यस्या गणत्रयेषु पादो पथ्यावद् विश्राम्यति, पुनरार्याषष्ठैकलघुगणवदन्त्यार्द्ध-सममर्द्धद्वयमत्र वर्त्तते, अत इयमार्यान्त्यदलविन्यासवती पथ्यापूर्व्विकोपगीतिर्नामार्या। विपरीतभावगर्भगागस्योपगीतिरुच्यते।

२ पथ्याविपुलोपगीतित्युदाहरणमिति क, चिह्नितपुस्तकपाठो न सङ्गतः।

३ वस्तुमस्तु सततं हि मे प्रीतिरिति ख, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च। यस्या उभयदलयोस्त्रिषु गणेषु पादो न विश्राम्यति, पुनः षष्ठैकलघुगणवदार्याद्वितीयदलवद्दलद्वयं समं वर्त्तते, अत इयं नामानुरूपलक्षणद्वया महाविपुला-पूर्व्विकोपगीतिर्नामार्या। प्रचुरगामत्र विपुलोपगीतिः कथ्यते।

द्वि० १ ज०२ द्वि०३ ज०४ द्वि०५ ए०६द्वि०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ ऽ ऽ

वैराग्यभावनानां तथोपगीत्या भवेत् स्वस्थम् (१) ॥

महाचपला-महाविपुलोपगीत्युदाहरणम् (२)।

स० १ ज०२ द्वि०३ ज०४ भ०५ ए०६द्वि० गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । । ऽ ऽ ऽ

विपुलोपगीति सन्त्यज्यतामिदं स्वस्थकं भिक्षो(३)।

स० १ ज०२ द्वि०३ ज०४ द्वि०५ ए०६द्वि०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ ऽ ऽ

विषयाभिलाषदोषेण बाध्यते चञ्चलं चित्तम् (४) ॥

(१२७) उत्क्रमेणोद्गीतिः ॥ ३० ॥

पूर्व्वोक्तात् क्रमाद् विपरीतक्रम उत्क्रमः। अयमर्थः, आद्य-

---

१ यस्या उभयत्र गणत्रयेषु पादो विश्राम्यति, पुनः षष्ठैकलघुगणवदार्थाद्वितीयदलवद्दलद्वयमस्ति, द्वितीयतुर्य्यौ गमध्यौ जौ, उभयत्र द्विगुरुश्च तृतीयः, वर्त्तते, अत इयं नामानुरूपलक्षणयाक्रान्ता पथ्यामहाचपलापूर्व्विकोपगीतिर्नामार्य्या।

२ महाविपुलामहाचपलोपगीत्युदाहरणमिति ख, ग, चिह्नितपुस्तकपाठः।

३ इदं स्थानकं भिक्षो इति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

४ बध्यते चञ्चलं चेत इति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च। यस्या-उभयार्द्धे प्रथमः सगणः, द्वितीयचतुर्थौ जगणौ, तृतीयो द्विगुरुः, महाविपुलावत् पुनरुभयत्र गणत्रयान्ते पादो न विश्राम्यति, उपगीतिवत् षष्ठैकलघुगणवदार्य्योक्तदलवद्दलद्वयं च वर्त्तते, अत इयं नामद्वयानुरूपलक्षणाक्रान्ता महाचपलामहाविपुलापूर्व्विकोपगीतिर्नामार्य्या।

मन्त्यं (१) भवत्यर्द्धमन्त्यमादौ, सा उद्गीतिर्नामार्या। तत्र पथ्यो-द्गीत्युदाहरणम्।

भ०१ द्वि०२ स०३ स०४ द्वि०५ ए०६ भ०७ गु०

S I I S S I I S I I S S S I S I I S

**व्याध इवोद्गीतिरवैः प्रथमं तावन्मनो हरसि।**

भ०१ स०२ भ०३ द्वि०४ द्वि०५ ज०६ द्वि०७ गु०

S I I I I S S I I S S S S I S I S S S

**दुर्नयकर विश्राम्यसि पश्चात् प्राणेषु विप्रियैः शल्यैः (२) ॥**

महाविपुलोद्गीत्युदाहरणम्।

द्वि०१ ज०२ द्वि०३ ज०४ स०५ ए०६ भ०७ गु०

S S I S I S S I S I I I S I S I I S

**एषा तवापरोद्गीतिरत्र विपुला परिभ्रमति (३)।**

द्वि०१ ज०२ द्वि ३ सर्व०४ द्वि०५ ज०६ स०७ गु०

S S I S I S S I I I I S S I S I I I S S

**त्वद्वल्लभापि यत् कीर्त्तिरखिलदिक्पालपार्श्वमुपयाति (४)॥**

पथ्यामहाचपलोद्गीत्युदाहरणम्।

---

१ चान्त्यमन्ते इति ख, ग, चिह्नितपुस्तकपाठः।

२ विप्रियैः सर्वैरिति ग, चिह्नितपुस्तकपाठः। यस्याः पथ्यावदुभयत्र गणत्रये पादो विश्राम्यति, पुनः षष्ठे लघुगणवदार्याया अन्त्यमर्द्धमथादौ, षष्ठजगणवदाद्यमर्द्धं चान्ते वर्त्तते, अत इयं पथ्यापूर्विकोद्गीतिर्नामार्या।

३ उद्गीतिः सर्वत्र परिभ्रमतीतिपाठः क, चिह्नितपुस्तकेऽस्ति। परन्तु एतादृश-पाठे उद्गीतिलक्षणसमन्वयो न भवति। प्रथमार्द्धे षष्ठे लघुगणस्यालाभात्।

४ यस्या उभयदले महाविपुलावद्गणत्रये पादो न विश्राम्यति, पुनरार्यायाः षष्ठ-

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ स०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । । ऽ ऽ

**उद्गीतिरत्र नित्यं प्रवर्त्तते कामचपलानाम्।**

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ ऽ

**तस्मान् मुने विमुञ्च प्रदेशमेतं समेतमेताभिः(१)॥**

महाविपुलामहाचपलोद्गीत्युदाहरणम्।

स०१ ज०२ द्वि०३ ज०४ द्वि०५ ए०६ भ०७ गु०

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । । ऽ

**विपुला पयोधरश्रोणिमण्डले चक्षुषोश्चपला।**

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ भ०७ गु०

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ । । ऽ

**उद्गीतिशालिनी कामिनी च सा वालिनी मनो हरति(२)॥**

---

लघुगणवद् द्वितीयार्द्धमाद्यं, षष्ठजगणवत् प्रथमार्द्धमन्त्यं वर्त्तते, अत इयं लक्ष-लक्षणाक्रान्ता महाविपुलापूर्व्विकोद्गीतिर्नामार्य्या। महत्युद्घोषणा च विपुलोद्गीति-रुच्यते।

१ प्रदेशमेनं समेतमेताभिरिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च। अस्याः पथ्यावद् दलद्वये त्रिषु गणेषु पादो विश्राम्यति, पुनरुभयार्द्धे महाचपलावद् द्वितीयचतुर्थौ जगणौ गुरुमध्यगतौ स्तः, द्विगुरुश्च तृतीयो वर्त्तते, पुनरुद्गीति-वदार्य्योभयार्द्धे विपरीते वर्त्तेते, अत इयं लक्षलक्षणाक्रान्ता पथ्यामहाचपला-पूर्व्विकोद्गीतिर्नामार्य्या।

२ धारिणी मनो हरतीति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च। अस्या दलद्वये महाविपुलावद्गणत्रये पादो न विश्राम्यति, पुनर्महाचपलावदुभयार्द्धे

(१२८) अर्द्धे वसुगण आर्य्यागीतिः ॥ ३१ ॥

अष्टगणे प्रथमार्द्धे, सा (१) आर्य्यागीतिर्नामार्य्या। अष्टमोऽपि गणश्चतुर्मात्रको(२) भवतीत्यर्थः। विशेषाभावाद्द्वितीयमप्यर्द्धं तादृशमेव। अत्रापि षष्ठो गणो द्विविकल्प एव नलकारः। अर्द्ध इति वर्त्तमाने पुनरर्द्धग्रहणाद् गणग्रहणाच्च इयमपि पथ्यादिलक्षणपूर्व्विका आर्य्यागीतिः। पथ्यार्य्यागीत्युदाहरणम्।

सर्व०१ सर्व०२ द्वि०३ द्वि०४ द्वि०५ ज०६ द्वि०७ स०८

। । । । । । । । ऽ ऽ ऽ ऽ ऽ ऽ । ऽ । ऽ ऽ । । ऽ

अजमजरममरमेकं प्रत्यक् चैतन्यमीश्वरं ब्रह्मपरम्।

द्वि०१ द्वि०२ स०३ स०४ द्वि०५ ज०६ द्वि०७ द्वि०८

ऽ ऽ ऽ ऽ । । ऽ । । ऽ ऽ ऽ । ऽ । ऽ ऽ ऽ ऽ

आत्मानं भावयती भवमुक्तिः स्यादितीयमार्य्यागीतिः (३)॥

महाविपुलार्य्यागीत्युदाहरणम्।

---

द्वितीयचतुर्थौ गुरुमध्यगतौ जगणौ, द्विगुरुश्च तृतीयोऽस्ति, पुनरुद्गीतिवदार्य्योभयार्द्धे विपरीते वर्त्तेते, अत इयं महाविपुलामहाचपलापूर्व्विकोद्गीतिर्नामार्य्या।

१ अष्टगणाः प्रथमार्द्धे यस्या भवन्ति सा इति ग, चिह्नितपुस्तकपाठः।

२ चतुर्मात्रिक इति ख, ग, चिह्नितपुस्तकपाठः, पुंस्तकान्तरपाठश्च। चतुर्मात्रिक एव इति ग, चिह्नितपुस्तकपाठः।

३ अस्याः पथ्यावत् त्रिषु गणेषु पादो विश्राम्यति, पुनरुभयदलयोरष्टगणाः सन्ति। षष्ठश्च जगणो वर्त्तते, अत इयं पथ्यापूर्व्विकार्य्यागीतिर्नामार्य्या। आर्य्यजनानामासमन्ताद्गीतिरार्य्यागीतिः कथ्यते।

स०१ ज०२ स०३ ज०४

I I S I S I I I S I S I

विषयाभिलाषमृगतृष्णिका भ्रु

स०५ सर्व०६ सर्व०७ स०८

S I I I I I I I I I I I I S

वं हरति हरिणमिव हतहृदयम्।

स०१ ज०२ स०३ ज०४

I I S I S I I I S I S I

विपुलात्ममोक्षसुखकाङ्क्षिभिस्त-

द्वि०५ ज०६ सर्व०७ द्वि०८

S S I S I I I I I S S

तस्त्यज्यते विषयरससङ्गः (१)॥

पथ्याजघनचपलार्य्यागीत्युदाहरणम्।

द्वि०१ ज०२ द्वि०३ स०४ द्वि०५ सर्व०६ स०७ स०८

S S I S I S S I I S S S I I I I I I S I I S

वाताहतोर्म्मिमालाचपलं सम्प्रेक्ष्य विषयसुखमल्पतरम्।

---

१ विपुलात्मभिस्ततो मोक्षकाङ्क्षिभिस्त्यज्यते विषयसुखसङ्ग इति ग, चिह्नित-पुस्तकपाठः। अस्या महाविपुलावद्दलद्वये त्रिषु गणेषु पादो न विश्राम्यति, पुनरुभयदलयोरष्टगणाः सन्ति। षष्ठो गणः सर्वलघुर्मध्यगुरुश्च वर्त्तते। अत इयं महाविपुलापूर्विकार्य्यगीतिर्नामार्या।

द्वि०१ ज०२ द्वि०३ ज०४ द्वि०५ ज०६ द्वि०७ स०८

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ । । ऽ

मुक्ता समस्तसङ्गं तपोवनान्याश्रयन्ति तेनात्मविदः (१) ॥

महाविपुलामहाचपलार्य्यागीत्युदाहरणम् ।

स०१ ज०२ द्वि०३ ज०४ द्वि०५

। । ऽ । ऽ । ऽ ऽ । ऽ । ऽ ऽ

चपलानि चक्षुरादीनि चित्तहारी

ज०६ सर्व०७ स०८

। ऽ । । । । । । । ऽ

च हन्त हृतविषयगणः ।

द्वि०१ ज०२ द्वि०३ ज०४ भ० ५

ऽ ऽ । ऽ । ऽ ऽ । ऽ । ऽ । ।

एकान्तशीलिनां (२) योगिनाम तोभव

सर्व०६ स०७ द्वि०८

। । । । । । । ऽ ऽ ऽ

ति परमसुखसम्प्राप्तिः (३) ॥

इत्यार्य्याधिकारः ॥

---

१ अत्र पथ्यायांगीत्योर्लक्षणसमन्वयोऽस्ति, पुनः, जघनचपलावच्चरमेऽर्द्धे द्वितीयचतुर्थौ गुरुमध्यगतौ जगणौ, द्विगुरुश्च तृतीयोऽस्ति। अत इयं पथ्याजघनचपलापूर्विकार्यागीतिर्नामार्या ।

२ एकान्तशालिनामिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च ।

३ अस्या महाविपुलालक्षणत्रये पादो न विश्राम्यति । पुनरुभयदलयोरष्टगणाः

(अथवैतालीयाधिकारः।)

(१२९)वैतालीयं द्विःस्वरा अयुक्पादे युग्वसवोऽन्ते ल्गाः॥३२॥

ल इत्यनुवर्त्तते। यत्र 'अयुक्पादे' प्रथमे तृतीये च, 'द्विःस्वराः' चतुर्दशलकारा भवन्ति, 'युक्पादे च द्वितीये चतुर्थे च, 'युग्वसवः' षोडशलकाराः, तद् वैतालीयं नाम च्छन्दः। तेषां तां मध्ये उभयोरपि (१) पादयोरन्ते रेफलकारगकाराः कर्त्तव्याः। आद्ये पादे षड्लकाराः पश्चादवशिष्यन्ते, द्वितीये चाष्टौ। एवं वैतालीयार्द्धं सिद्ध्यति। द्वितीयमप्यर्द्धं तादृशमेव। तत्रोदाहरणम्।

रगणः ल० गु०

१।२ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १।२ ३।४ ५।६ ७
क्षुत् क्षो ण श री र स च्छ या व्य क्ती भू त-

रगणः ल० गु०

८ ९।१० ११ १२।१३ १४ १५।१६
शि राऽस्थि प ञ्ज राः।

---

तत्र षष्ठो गणो मध्यगुरुः सर्वलघुश्च वर्त्तते, पुनर्दलद्वये महाचपलावत् द्वितीयचतुर्थौ जगणौ, गुरुमध्यगतौ, द्विगुरुश्च तृतीयोऽस्ति। अत इयं महाविपुला-महाचपलापूर्विकार्यागीतिर्नामार्या।

१ द्वयोरपीति ख, ग, चिह्नितपुस्तकपाठः। पुस्तकान्तरपाठश्च।

रगणः　ल०　गु०

१।२ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १।२ ३।४ ५।६ ७
के शैः प रु षै स्त वा र यो वै ता ली यं

रगणः　ल०　गु०

८ ९।१० ११ १२।१३ १४ १५।१६
त नुं वि त न्व ते (१)॥

अपिच।

तव तन्वि कटाक्षवीक्षितैः प्रहरद्भिः (२)श्रवणान्तगोचरैः।
विशिखैरिव तीक्ष्णकोटिभिः प्रहतः प्राणिति दुष्करं गतः(३)॥

अपिच।

शवशोणितपङ्कराञ्जितं (४) पुरुषान्त्रग्रथितोर्द्ध्वमूर्द्धजम्।

---

१ अस्य प्रथमतृतीययोः पादयोश्चतुर्दशमात्राः, द्वितीयचतुर्थयोः षोडशमात्राः सन्ति, पुनरयुक्पादे षष्ठ्याः, युक्पादे अष्टम्याश्च मात्रायाः परतः क्रमेण रगणो लघुर्गुरुश्च पतितोऽस्ति। पुनरयुक्पादे द्वितीयातृतीययोश्चतुर्थीपञ्चम्योश्च मात्रयोरेकस्मिन् गुर्वक्षरेऽवस्थितिर्नास्ति। युक्पादे षष्ठीसप्तम्योश्च मात्रयोर्नैकत्रावस्थितिर्वर्त्तते। अत इयं वैतालीयन्नाम च्छन्दो बोध्यम्।

२ प्रचरद्भिरिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च। प्रसरद्भिरिति ग, चिह्नितपुस्तकपाठः।

३ दुष्कृतं नर इति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

४ पङ्कराचिंतमिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च। पङ्कचर्चितमिति ग, चिह्नितपुस्तकपाठः।

वपुरन्तरवह्निदीपितं (१) वैतालीयमिदं विलोकयताम् (२)॥

वैतालीयमिति वेतालशब्दात् कृशाश्वादेराकृतिगणत्वाच्छण्-प्रत्ययश्चातुरर्थिकः। अत्र पादग्रहणमिदं ज्ञापयति, यदार्य्यादीनां (३) पादश्चतुर्भाग इति व्यवस्था नास्ति॥

### (१२०) गौपच्छन्दसकम्॥ ३३॥

अस्मिन् वैतालीये (४) छन्दस्यन्ते गकारश्चेद् अधिको भवति, तदौपच्छन्दसकं (५) नाम छन्दः। तत्रोदाहरणम्।

रगणः ल० गु० गु०

१।२ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १५।१६ १।२ ३।४ ५।६

वा क्यै र्म धु रैः प्र ता र्य्य पू र्वं यः प श्चा-

रगणः ल० गु० गु०

७ ८ ९।१० ११ १२।१३ १४ १५।१६ १७।१८

द भि स न्द धा ति मि त्रम्।

---

१ वपुरातपवह्निदीपितमिति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

२ तव तन्वीत्याद्युदाहरणद्वयमपि वैतालीयलक्षणाक्रान्तमेव। केवलमत्र पादमुखस्थितमात्राविन्यासभेदो वर्त्तते।

३ आर्य्यायामिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

४ तस्मिन्नेव वैतालीये इति ख, ग चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

५ औपच्छन्दसिकमिति सर्वत्र ग, चिह्नितपुस्तके पाठः।

रगणः लo गुo गुo

१।२ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १५।१६ १।२ ३।४

तं दु ष्ट म तिं वि श्रि ष्ट गो ष्ठ्या मौ प-

रगणः लo गुo गुo

५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६ १७।१८

च्छ न्द स कं व द न्ति वा ह्यम्(१)॥

अपिच।

परमर्मनिरीक्षणानुरक्तं स्वयमत्यन्तनिगूढचित्तवृत्तिम्।
अनवस्थितमर्थलुब्धमाराद्दौपच्छन्दसकं जहीहि मित्रम्(२)॥

उपच्छन्दः शब्दादर्हणादिपाठाच्चातुरर्थिको वुञ्प्रत्ययः॥

(१२२) आपातलिका भ्गौ ग्॥ ३४॥

रेफलकारगकाराणामपवादः। द्विःस्वरा अयुक्पादे, युग्वसवोऽन्ते, इत्यनुवर्त्तते। पूर्वलक्षणयोरन्ते भकारो गकारद्वयञ्च (३) भवतः, तद्वैतालीयमापातलिकानाम लभते। तत्रोदाहरणम्।

१ अस्य प्रथमतृतीययोः पादयोः षोडशमात्राः, द्वितीयचतुर्थयोरष्टादशमात्राः सन्ति। पुनरयुक्पादे द्वितीयातृतीययोश्चतुर्थीपञ्चम्योः, युक्पादे षष्ठीसप्तम्योश्च मात्रयोरेकस्मिन् गुर्वक्षरे अवस्थितिर्नास्ति, पुनः षष्ठ्यष्टमीमात्राभ्यां परतः क्रमेण षट्स्वक्षरेषु रगणो लघुर्गुरुर्गुरुश्च पतितोऽस्ति, अत इदं वैतालीयपूर्वकमौपच्छन्दकं नाम च्छन्दो बोध्यम्।

२ अत्र पादयुगानां षडष्टमात्राणां पूर्वोदाहरणतो विन्यासप्रभेदादिदमपरप्रकारकमौपच्छन्दसकोदाहरणं ज्ञातव्यम्।

३ भकारो गकारौ चेति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

भगणः  गु०  गु०

१।२  ३  ४  ५।६  ७।८  ९  १०  ११।१२  १३।१४  १।२  ३।४  ५।६
पि ङ्ग ल के शो क पि ला क्षी वा चा टा

भगणः  गु०  गु०

७  ८  ९।१०  ११  १२  १३।१४  १५।१६
वि क टो न्न त द न्ती।

भगणः  गु०  गु०

१।२  ३।४  ५  ६  ७।८  ९  १०  ११।१२  १३।१४  १  २  ३
आ पा त लि का पु न रे षा नृ प ति

भगणः  गु०  गु०

४  ५।६  ७  ८  ९।१०  ११  १२  १३।१४  १५।१६
कु ले ऽपि न भा ग्य मु पै ति (१)॥

आपातलिका अस्थिरा इत्यर्थः॥

(१११) शेषे परेण युङ् न साकम्॥ ३५॥

अत्र वैतालीयाधिकारे येषां लकाराणां नियम उक्तास्तद्व्यतिरिक्तो यो लकारवर्गः, सः 'शेषः,' तस्मिन् नियमः क्रियते, 'युग्' लकारः 'परेण साकं न', मिश्रीकार्य्यः, द्वितीयस्तृतीयेन,

१ अस्य प्रथमतृतीययोः पादयोश्चतुर्दशमात्राः, द्वितीयचतुर्थयोः, षोडशमात्राः सन्ति, पुनरयुक्पादे द्वितीयातृतीययोश्चतुर्थीपञ्चम्योः, युक्पादे षष्ठीसप्तम्योश्च मात्रयोरेकस्मिन् गुर्वक्षरे स्थितिर्नास्ति, पुनः षष्ठाष्टममात्राभ्यां परतः क्रमेण पञ्चस्वक्षरेषु भगणो गुरुर्गुरुश्च पतितोऽस्ति, अत इदं वैतालीयपूर्वकमापातलिकानामकं छन्दो ज्ञेयम्।

चतुर्थः पञ्चमेन, युक्पादे षष्ठश्च सप्तमेन। एवं वदता शेषाणां मिश्रीभावोऽप्यनुज्ञातः। तत्रोदाहरणं पूर्वमेव(१)॥

(१२१) षट् चामिश्रा युजि॥ ३६॥

अत्र द्वितीयचतुर्थयोः पादयोः षड् लकारा अमिश्रा न कर्त्तव्याः, पृथक् पृथक् न प्रयोक्तव्या इत्यर्थः। प्रथमतृतीययोश्च पादयोः स्वरुचिः। तत्रोदाहरणं वैतालीये तावत्।

समरशिरसि सञ्चरते द्विषां नवनिशितायुधवृष्टिरग्रतः।
कुवलयदलदीर्घचक्षुषां प्रमदानां न कटाक्षवीक्षितम्॥

औपच्छन्दसकोदाहरणम्।

परयुवतिषु पुत्रभावमादौ कृत्वा प्रार्थयते(२) पुनः पतित्वम्।
इदमपरमिहोच्यते विशेषादौपच्छन्दसकं खलस्य वृत्तम्॥

आपातलिकोदाहरणम्।

अभिरमयति किन्नरकण्ठी हंसगतिः श्रवणायतनेत्रा। विश-
दकमलकोमलगात्री(३) युवतिरियं हृदयं तरुणानाम्(४)॥

---

१ यत्रोदाहरणं पूर्वोक्तमिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

२ प्रार्थयसे इति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

३ विसकिसलयकोमलगात्रीति पुस्तकान्तरपाठः।

४ समरशिरसि, परयुवतिषु, इदमपरमित्युदाहरणत्रयं वैतालीयादिस्वस्वलक्षणाक्रान्तमेव। केवलमत्रायुक्पादमुखवर्त्तिन्यः षण्मात्राः पृथक् पृथक् प्रयुक्ताः सन्ति, युक्पादे तु तन्नास्तीत्येतावान् पूर्वतोऽत्र विशेषः।

(११४) पञ्चमेन पूर्वः साकं प्राच्यवृत्तिः॥ ३७॥

इदानीं विशेषलक्षणमाह। शेषे परेण युङ् न साक-मित्यनेन(१) पञ्चमचतुर्थयोरेकीभावो निषिद्धः। सोऽनेन विधीयते। युजीत्यनुवर्त्तते। यदा युक्पादे 'पञ्चमेन' लकारेण, 'पूर्व्वः', सङ्गच्छते, तदा प्राच्यवृत्तिर्नाम वैतालीयं भवति। शेषं यथाप्राप्तम्। तत्रोदाहरणम्।

रगणः ल० गु०

१ २ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १।२ ३
वि पु ला र्थ सु वा च का क्ष राः क स्य

रगणः ल० गु०

४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
ना म न ह र न्ति मा न सम्।

रगणः ल० गु०

१ २ ३।४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १।२ ३ ४।५
र स भा व वि शे ष पे श लाः प्रा च्य वृ-

रगणः ल० गु०

६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
त्ति क वि का व्य स म्प दः(२)॥

१ साकमित्यमेवेति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

२ अत्र युक्पादे चतुर्थपञ्चममात्रयोरेकभावस्थितिरस्ति, एतावानेव वैतालीय लक्षणतोऽस्य विशेषः।

(१२५) अयुक् तृतीयेनोदीच्यवृत्तिः ॥ ३८ ॥

पूर्व्वः साकमित्यनुवर्त्तते। 'अयुक्पादे' 'तृतीयेन' लकारेण, यदि पूर्व्वः सङ्गच्छते, तदा उदीच्यवृत्तिर्नाम वैतालीयं। शेषं यथाप्राप्तमेव। तस्योदाहरणम्।

रगणः ल० गु०
१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १ २
अ वा च क म नू र्जि ता क्ष रं श्रु ति-

रगणः ल० गु०
३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
दु ष्टं श्रु ति क ष्ट म क्र मम् (१)।

रगणः ल० गु०
१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १ २
प्र सा द र हि त ञ्च ने ष्य ते क वि-

रगणः ल० गु०
३।४ ५।६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६
भिः का व्य मु दी च्य वृ त्ति भिः (२) ॥

---

१ यतिकष्टमक्रममिति ख, ग, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

२ अत्र वैतालीयलक्षणं यथाश्रुतं घटते। पुनरयुक्पादे द्वितीयतृतीयमात्रयोरेकस्मिन् गुर्वक्षरेऽवस्थितिर्वर्त्तते। अत इदमुदीच्यवृत्तिं नाम वैतालीयं छन्दो बोध्यम्।

(१२१) आभ्यां युगपत् प्रवृत्तकम् ॥ ३९ ॥

'आभ्यां' पूर्व्वोक्तलक्षणाभ्यां, 'युगपत्प्रवृत्ताभ्यां, प्रवृत्तकं नाम वैतालीयम्। युक्पादे पञ्चमेन पूर्वः सङ्गच्छते[१], अयुक्पादे तृतीयेन द्वितीय इत्यर्थः। अत्रोदाहरणम् [२]।

रगणः ल० गु०

१ २।३ ४ ५ ६ ७।८ ९ १०।११ १२ १३।१४ १।२ ३ ४।५

इ दं भ र त वं श भू भृ तां[३] श्रू य तां

रगणः ल० गु०

६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

श्रु ति म नो र सा य नम्।

रगणः ल० गु०

१ २।३ ४ ५ ६ ७।८ ९।१० ११ १२ १३।१४ १।२ ३

प वि त्र म धि कं शु भो द यं व्या स-

रगणः ल० गु०

४।५ ६ ७ ८ ९।१० ११ १२।१३ १४ १५।१६

व क्त्र क थि तं प्र वृ त्त कम्[४]॥

---

१ पूर्वः संयुज्यते इति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

२ तत्रोदाहरणमिति ख, ग, चिह्नितपुस्तकपाठः।

३ भरतवंशभूभुजामिति ख, चिह्नितपुस्तकपाठः, पुस्तकान्तरपाठश्च।

४ अत्र वैतालीयलक्षणे प्राच्यवृत्त्युदीच्यवृत्तिलक्षणं वर्त्तते। अत इदं प्रवृत्तकं नाम वैतालीयं छन्दो बोध्यम्।

